धर्मराजस्य चरणौ पीडयामास हृष्टवत् ॥ २१
तमुत्थाप्य महाराज धर्मपुत्रः प्रतापवान् ।
सस्वजे भरतश्रेष्ठमुपजिघ्रन्नुपस्पृशन् ॥ २२
नकुलः सहदेवश्च पाण्डवश्च वृकोदरः ।
अभिवाद्य महाराजमस्वजन्त स फल्गुनम् ॥ २३
धृष्टद्युम्नः शिखण्डी च पाण्डवानां च ये रथाः ।
वर्धयन्ते स्म राजानं निहते सूतनन्दने ॥ २४
ततः कृष्णो महाराज सात्यकिश्चापि सात्वतः ।
वर्धयन्ते स्म राजानं निहते सूतनन्दने ॥ २५
वासुदेवश्च कौन्तेयं प्रणयादिदमब्रवीत् ।
अद्य राजन्हताः सर्वे धार्तराष्ट्राः सराजकाः ।
हते वैकर्तने कर्णे रथानां प्रवरे रथे ॥ २६
यदि लोकास्त्रयः सर्वे योधयेयुः सवासवाः ।
तथापि दुर्जयः सूतस्तव कोपात्तु सूदितः ॥ २७
एवमुक्तः प्रत्युवाच धर्मराजो जनार्दनम् ॥ २८
तव प्रसादाद्गोविन्द हतः कर्णो महायशाः ।
पाण्डवाश्च जयं प्राप्ता नाशिताश्चापि शत्रवः ॥ २९
त्वं हि शक्तो भयात्त्रातुं यस्य कस्यचिदाहवे ।
त्वमस्य जगतो गोप्ता पाण्डवानां च सर्वदा ॥ ३०
त्वां समासाद्य शक्रोऽपि मोदते दिवि नित्यशः ।
त्वं पाता पाण्डुपुत्राणां यथैव जगतस्तथा ॥ ३१
अनाश्चर्यो जयस्तेषां भक्तिर्येषां त्वयि प्रभो ॥ ३२
त्वया नाथेन गोविन्द नाथवन्तो वयं युधि ।
यथेन्द्रेण पुरा देवास्त्वया चापि जनार्दन ॥ ३३
स्वप्स्याम्यद्य सुखं कृष्ण निद्रां लप्स्ये त्वहं क्षपाम् ।
विगतं हि भयं मेऽद्य त्वत्प्रसादान्न संशयः ॥ ३४
एवमुक्तस्तु पार्थेन केशवः प्राह पाण्डवम् ।
निमित्तमात्रं हि वयं तवाप्यस्मिन्मुदागमे ॥ ३५
यस्य ते भ्रातरः शूरा भीमसेनादयो नृप ।
संबन्धिनश्चेन्द्रवीर्याः पार्षतप्रमुखास्तथा ॥ ३६
अर्हते च भवान्नित्यं प्रियं नित्यं च मद्धितम् ।
प्रियो हि मे त्वमेतेन वचनेन नरोत्तम ॥ ३७
इत्युक्तो धर्मराजस्तु स्वरथं हेमभूषितम् ।
दन्तवर्णैर्हयैर्युक्तं कालवालैर्महीपतिः ॥ ३८
आस्थाय पुरुषव्याघ्रः स्वबलेनापि संवृतः ।
प्रययौ बहुवृत्तान्तं द्रष्टुमायोधनं प्रति ॥ ३९
संभाषमाणौ तौ वीर उभौ माधवपाण्डवौ ॥ ४०
स ददर्श रणे कर्णं शयानं पुरुषर्षभम् ।
गाण्डीवमुक्तैर्विशिखैः सर्वतः संनिपीडितम् ॥ ४१
सपुत्रं निहतं दृष्ट्वा कर्णं राजा युधिष्ठिरः ।
प्रशशंस नरव्याघ्रावुभौ माधवपाण्डवौ ॥ ४२
अद्य राजाऽस्मि सर्वस्यां पृथिव्यां मधुसूदन ।
दिष्ट्या जयसि गोविन्द दिष्ट्या शत्रुर्निपातितः ४३
एवं सुबहुशो राजन्प्रशशंस जनार्दनम् ।
अर्जुनं च कुरुश्रेष्ठो धर्मराजो युधिष्ठिरः ॥ ४४
दृष्ट्वा च निहतं कर्णं सपुत्रं पार्थसायकैः ।
पुनर्जातमिवात्मानं मेने कुरुकुलोद्वहः ॥ ४५
समेत्य च कुरुश्रेष्ठं कुन्तीपुत्रं युधिष्ठिरम् ।
वर्धयन्ति स्म राजानो हर्षयुक्ता महारथाः ॥ ४६
सञ्जय उवाच ।
एवमेष क्षयो वृत्तः सुमहाल्लोमहर्षणः ।
तव दुर्मन्त्रिते राजन्दिष्ट्या त्वमनुशोचसि ॥ ४७
वैशंपायन उवाच ।
श्रुत्वैतदप्रियं राजा धृतराष्ट्रो महीपतिः ।
पपात भूमौ निश्चेष्टः कौरव्यः परमासनात् ।
तथा सत्यव्रता देवी गान्धारी दिव्यदर्शना ॥ ४८
ततस्तूर्णं तु विदुरस्तं नृपं सञ्जयस्तथा ।
पर्याश्वासयतां चैतावुभावेव तु भूमिपम् ॥ ४९
तथैवाश्वासयामासुर्गान्धारीं कुरुयोषितः ॥ ५०
स दैवं परमं मेने भवितव्यं च भारत ।
ताभ्यामाश्वासितो राजा तूष्णीमास्ते विशांपते ५१
एवमाख्याय राज्ञे च सञ्जयो राजसत्तम ।
जगाम शिबिरं भूयो हते कर्णे महात्मनि ॥ ५२
स दृष्ट्वा निहतं शल्यं राजानं च सुयोधनम् ।
शकुनिं सुबहूंश्चान्यान्सैनिकांश्च सहस्रशः ॥ ५३
तथैव पाण्डवीं सेनां निहतां प्रेक्ष्य सञ्जयः ।
सौप्तिके द्रौणिना राजन्हतवाजिनरद्विपाम् ॥ ५४

स हि दृष्ट्वा हतान्सर्वान्समन्ताद्युधि सञ्जयः।
प्रयातो हास्तिनपुरं शोकार्तो भयविह्वलः॥ ५५
हतेषु पुनरेतेषु प्रभूतगजवाजिषु।
योधैश्च तैर्महाराज नानादेशसमुद्भवैः॥ ५६
कुरुक्षेत्रं तु तत्सर्वं शून्यमासीद्विशांपते।
निहतैः पाण्डवेयैश्च धार्तराष्ट्रैश्च संयुगे॥ ५७
यथाहि विषयं वृत्तं धार्तराष्ट्रस्य संजयः।
निवेदयति तत्सर्वं यथावृत्तं यथाविधि॥ ५८

एवं महायुद्धमिदं महात्मनो
धनञ्जयस्याधिरथेश्च यः पठेत्।
स सम्यगिष्टस्य मखस्य यत्फलं
तदाप्नुयाद्यः शृणुयाच्च नित्यशः॥ ५९
मखो हि विष्णुर्भगवान्सनातनो
वहन्ति यं चाप्यनिलेन्दुभानवः।
अतोऽनसूयुः शृणुयात्पठेच्च यः
स सर्वलोकांश्च जयेत्सुखी भवेत्॥ ६०

॥ इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां कर्णपर्वणि एकाधिकशततमोऽध्यायः॥ १०१॥

॥ कर्णपर्व समाप्तम्॥ ८॥

---

अतः परं शल्यपर्व भविष्यति।
तस्यायमाद्यः श्लोकः॥
जनमेजय उवाच।
एवं निपातिते कर्णे समरे सव्यसाचिना।
अल्पावशिष्टाः कुरवः किमकुर्वत वै द्विज॥ १

इदं कर्णपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां
निर्णयसागरमुद्रायन्त्रे मुद्रापितम्। शकाब्दाः १८२९ सन १९०७.



